सन्धेहि त्वमहो ! महोदर ! शर कोदण्डदण्डेऽधुना,
सम्प्राप्त प्रधनोत्सवाय भवता दिष्टोऽयमिष्टो यत ॥ ४८ ॥

**शुकः**—( श्रुत्वा सवितर्कम् ) कथमसौ महाराजरावणादेशेन प्रहस्त समस्तानपि यातुधानप्रधानसुभटानेवमुत्साहयति ? । ( पुनरन्यतो निरीक्ष्य ) अये ! कथमितोऽपि—

बूत्कारैर्बधिरा धरा विदधत क्रोधारुणैराननै-
र्दिग्दाहभ्रममन्तरिक्षगतय क्षिप्र दिशन्तो द्विषाम् ।
कल्पान्तोद्धतवारिवारिधिचलत्कल्लोललीलाभृत,
सुग्रीवेण समीरिता सरभस धावन्त्यमी वानरा ॥ ४९ ॥

तदिद स्वामिने निवेदयामि । ( इति प्रासादादवतरन्नग्रतो विलोक्य ) कथमसौ कुमारविभीषणस्य विश्वासपात्रमस्मन्मित्र प्रच्छन्नवृत्तिर्विहङ्गवेग समागच्छति ? । तदेनमाहूय वार्तयामि । ( इति शब्दायते )

( प्रविश्य )

**विहङ्गवेगः**—सोऽय शुक समाकारयति माम् । ( इत्युपसर्पति । )

**शुकः**—सखे ! निमेषमुत्सुकतया वर्तसे ? ।

**विहङ्गवेगः**—प्रेषितोऽस्मि देव्या सरमया कुमारविभीषणसमीपम्, यथा सङ्ग्राम कामस्य महाराजरावणस्य प्रयाणकप्रवृत्तिं गत्वा विज्ञपयेति ।

**शुकः**—क्वेदानीं देवी सरमा ? ।

**विहङ्गवेगः**—अशोकवनिकाया सीतासन्निधाने ।

**शुकः**—सखे ! समुचितमेव रामविभीषणभार्ययोरेकत्रावस्थानम् । कथ च सा सम्प्रति वर्तते विदेहराजात्मजा ? ।

**विहङ्गवेगः**—( सकरुणम् ) वयस्य ! [1]तदेतद्युत ( [2]दनुक्त ) मेव श्रेय । यत –

निमीलिताक्षी गलदश्रुमिश्रां, भूपृष्ठशय्यामधिशय्य सीता ।
निरन्तरं ध्यायति राममेव, तन्नामसङ्कीर्तनशुष्ककण्ठी ॥ ५० ॥

केवलं त्रिजटासरमयोराश्वासनवचनैर्जीवित धारयति । ( पुन सचमत्कारम् ) परम-परमप्येतदाकर्ण्यताम्—

1 °मा प्रद° द० । 2 तदेतदेवास्तु । यत आ० ।

दुःखाग्निदूनाऽपि तनुर्मनोज्ञा, लग्नालकेऽप्युज्ज्वलता मुखेन्दौ ।
विधिर्विरुद्धोऽप्यपहर्तुमीशस्तस्या प्रमोदं न तु सुन्दरत्वम् ॥ ५१ ॥

**शुकः**—वयस्य ! यथैव न स्यात् तत् कथमसौ मन्मथगागुराया निशाचरपति निपतेत् ? । तदिदं सञ्चरितवानरवाहिनीवृत्तं प्रभवे निवेदयामि । ( इति निष्क्रान्तः । )

**विहङ्गवेगः**—( परिक्रामन्नग्रतो विलोक्य ) स एष कुमारविभीषणो रामभद्रेण सह सुवेलशैलशिखरावस्थितो लङ्कामवलोकयन्नास्ते । तदुपसर्पामि । ( इति तथाकरोति । )

( ततः प्रविशति रामो विभीषणश्च । )

**रामः**—( समन्तादवलोक्य ) सखे विभीषण ! यथास्थानमवस्थापितेषु वानरयूथाधिनायेषु सज्जीकृतैव सुग्रीवलक्ष्मणाभ्यां सङ्ग्रामसामग्री । किमिदं कस्मादद्य लङ्कापुरी गोपुरान्निर्गच्छदिव निरीक्ष्यते ? ।

**विभीषणः**—देव ! सम्यगवगम्य विज्ञपयामि । ( इति अवलोकयति । )

**विहङ्गवेगः**—( उभौ प्रणम्य विभीषणं प्रति ) कुमार ! सोऽयं महाराजरावणप्रगुणितसमग्रसैनिकनिकायः समीकाय समभ्येति । ( इति दर्शयति । )

**रामः**—( सोत्साहम् ) कथं लङ्केश्वरः स्वयमेव समागच्छति ? ।

**विहङ्गवेगः**—अथ किम् ? ।

( नेपथ्ये कलकलः )

**विभीषणः**—( श्रुत्वा साश्चर्यम् ) विहङ्गवेग ! कोऽयमायोधनभूमिकायामिहायाते सपरिवारेऽपि दशकन्धरे लङ्कायां कल्पान्तघनगर्जितानुकारी कोलाहलः श्रूयते ? । तदिदं विदित्वा सत्वरमिहागच्छ ।

**विहङ्गवेगः**—आदेशः प्रमाणम् । ( इति निष्क्रान्तः । )

**रामः**—( पुरो विलोक्य ) अहो ! विपुलता पौलस्त्यसैन्यस्य ।

**विभीषणः**—देव ! न केवलं विपुलतैव, सङ्ग्रामैकामताऽप्यस्य परिभाव्यताम् । तथा च—केऽपि कौन्तिकाः, केऽपि पारश्वधिकाः, केऽपि नैस्त्रिंशिकाः, केऽपि शाक्तीकाः, केऽपि धानुष्काः, केऽपि हम्यधराख्दाः, केऽपि पत्तयो यातुधानाः पुरतः समुन्नह्यन्ते ।

---

१ 'वृत्तान्तं तु' भा० ।

( प्रविश्य )

**विद्युद्वेगः**—( विभीषणं प्रति ) कुमार ! प्रथमं तावद् दशकन्धरदुरवलेपदलनार्थं तदसिद्धौ च विरोधिनिधनार्थं देव्या मन्दोदर्या प्रबोध्यमाने कुम्भकर्णे कर्णावस्कन्दी स एष कोलाहलः ।

**विभीषणः**—अथ प्रबुद्धः कुम्भकर्णः ? । किमभिहितं च तेन निरस्तनिद्रेण ? ।

**विद्युद्वेगः**—कुमार ! प्रबुद्धवता कुम्भकर्णेन प्रबोधकेभ्यः सीतापहारप्रभृति सैन्यसमागमनपर्यन्तं रामरावणयोर्वृत्तान्तमवगम्य सविमर्शमित्यभिदधे राक्षसराजः—

धर्मोऽस्मै रक्षसां यत् परधरणिधनाऽगारदाराऽपहारः,

कार्योऽयं शौर्यवृत्त्या, न पुनरुपधिना, सोऽथ चक्रे तथैव ? ।

चिन्त्यं कालानुकूल्यं तदपि न विदधे,

इत्यभिधाय पुनः सानुशयावष्टम्भमात्मानं प्रत्येवमूचे—

क्रौ व्यतीते वितर्कैः—

स्मर्त् तूर्णं कुम्भकर्ण ! व्रज समरधरामुद्धर भ्रातृशल्यम् ॥५२॥

इत्युक्त्वा पराक्रमितुमुपक्रान्तवान् ।

**रामः**—( सविमर्शम् ) अहो ! नीतिशक्तिसम्पृक्ता कुम्भकर्णस्य भणितिः ।

**विभीषणः**—देव ! भणितेरनुरूपः सम्प्रहारव्यवहारोऽप्यस्य चिन्तनीयः ।

**रामः**—किमुच्यते दशकन्धरानुजस्य कुम्भकर्णस्य ? । ( पुरोऽवलोक्य पश्यन् ) सखे विभीषण ! द्वन्द्वयुद्धविधानैनिबद्धबुद्धय इवैते यातुधानसैनिकाः सलक्ष्यन्ते तदवबोधयतु मामेतान् ।

**विभीषणः**—( विलोक्य सप्रत्यभिज्ञम् ) देव !

प्रेतराजस्य सदाव्यापारप्रतिहस्तकः ।

प्रहस्तोऽयमुदस्तोच्चैर्दण्डहस्तो विजृम्भते ॥ ५३ ॥

इतोऽपि—

महोदरं पुरः पश्य दशग्रीवमहोदरम् ।

गिरितुल्यगदादण्डमुद्दण्डदशकार्मुकम् ॥ ५४ ॥

**रामः**—यावदिमौ नीलेन सह कलहकेलिमनुभवितुमिच्छतः ? ।

---

1 °मागमनपर्यन्तं रामरावणयोः भा० । 2 तविन्दुस्य भा० ।

**विभीषणः**—एवम् । तदनन्तरश्चायम्—

> जगराजिनि वाजिनि स्थितस्तरुणाऽहस्करका[1]न्तिमिश्रित ।
> दिशते द्दशमङ्गदे मुहुर्विहितातङ्कभरा नरान्तक ॥ ५५ ॥

**रामः**—सखे ! कोऽसौ नैऋतेयसेनायामनायासविनिर्जितत्रिभुवनगीराहङ्कार इव पुरतः परिभाव्यते ?।

**विभीषणः**—देव !

> रथे स्थितोऽयं मृगराजकेतने, निकेतनं दुःप्रसहस्य तेजसः ।
> समं सुमित्रातनयेन सङ्गरं, समीहते रावणसूनुरिन्द्रजित् ॥ ५६ ॥

**रामः**—य किल मेघनादापरनामा मन्दोदरीनन्दन श्रूयते ?।

**विभीषणः**—अथ किम् ?।

**रामः**—कतर पुनरयं सुरचक्रवर्तिजित समीपवर्ती विलोक्यते ?।

**विभीषणः**—

> लङ्केश्वरादजनि य, स्थितवन्ति यत्र
> दिव्यायुधानि च विरञ्चि[2]वरेण वीरे ।
> रोमाञ्चकञ्चुकितकायतयाऽतिकायः,
> सोऽयं समित्यनुकरोति कदम्बपुष्पम् ॥ ५७ ॥

**रामः**—नन्वयमपि वत्सलक्ष्मणाभिमुख एव कटाक्षनिक्षेप ।

**विहङ्गवेगः**—देव ! समुत्कृष्टतेजसेऽभ्यसूयन्ति खलु मनस्विना मानसानि ।

**विभीषणः**—साधूक्त विहङ्गवेगेन । यदेतेऽपि समकालमहम्प्रथमिकया हनूमन्तमेव हन्तुकामा पुरतोऽवतिष्ठन्ते । ( इति दर्शयति । )

**रामः**—किमभिधाना पुनरमी यातुधाना ?।

**विभीषणः**—देव ! प्रथमन्तावत्—

> बालार्कबिम्बारुणचक्रकान्तिर्दन्तावलस्कन्धमधिष्ठितोऽयम् ।
> उदायुध कस्य मन सकम्पं, प्रकम्पन सयति नाऽऽतनोति ?॥ ५८ ॥

अपरश्च—

---

1 °वान्ततस्कर आ० । 2 °विनरेण आ० ।

घोरं दधानः परिघाभिधानमस्त्रं महाशस्त्रभृतां कृतान्तः ।
देवान्तकः सैष नरान्तकस्य, भ्राता प्रधानार्थमिहोज्जिहीते ॥ ५९ ॥

तदन्तिके च—

दशशिरस्तनयस्त्रिशिराः शरासनमयं नमयन्नवधार्यताम् ।
प्रधनमूर्द्धनि यः प्रदरान् किरन्, गजगतो जगतोऽपि भयङ्करः ॥ ६० ॥

**रामः**—( साश्चर्यम् ) किमेभिः प्रभूतैरप्यङ्गना¹तनूजस्य ? ।

**विभीषणः**—देव !

खरात्मजोऽयं मकराक्षनामा, दिव्यास्त्रयोधी वरसिन्धुरस्थः ।
तत्पैतृकं वैरमनुस्मरन् यस्त्वय्येव दुष्टां निदधाति दृष्टिम् ॥ ६१ ॥

**रामः**—( स्मित्वा ) भवतु । बहवः खल्वमी तमीचराः । तत्सङ्क्षेपतः समाचक्ष्व ।

**विभीषणः**—( सर्वानङ्गुल्या ²निर्दिशन् ) देव ! सोऽयमृषभेण महापार्श्वः, गजेन प्रतपनः, जाम्बवता विरूपाक्षः, शतबलिना विद्युज्जिह्वः, ³बलेन तपनः, गन्धमादनेन विद्युन्माली, गवाक्षेण घोराक्षः, गवयेन मायामयः, केसरिणा कील्कर्णः, द्विविदेन दीर्घदंष्ट्रः, मैन्देन ⁴वज्रमुष्टिरिति परस्परमपरैरपरेऽप्यायोधनविधित्सया पुरतः सरभन्ते ।

**रामः**—( पुनरवलोक्य ) कश्चासौ गगनमण्डलमण्डपावष्टम्भस्तम्भानुकारी महाराक्षसो दृश्यते ? ।

**विभीषणः**—देव !

लङ्कापुरीपरिभवे सति मय्यपीति,
व्रीडाविवर्णमवलोक्य कुम्भकर्णम् ।
देयं यदिष्टमिति वासनया परेषां,
निद्रारतिर्दिशति [redacted] निल दीर्घनिद्राम् ॥ ६२ ॥

**रामः**—( कुम्भकर्णं निर्वर्ण्य साश्चर्यम् )

आरोप्यते गिरिशिरस्यपरो गिरिश्चेत्,
तद्वद्घनमञ्जनजलेन विलिप्यते च ।
अत्युच्चमेचकतनुस्तनुते तदैष,
तत्तुल्यतामवरजो दशकन्धरस्य ॥ ६३ ॥

1 ॰तनयस्य मा॰ । 2 निदर्शयन् मा॰ । 3 नलेन मा॰ । 4 वज्रमु॰ मा॰ ।

**विभीषणः**—देव ! विलोक्यताम् । स एष त्रिभुवननियन्ता लङ्केश्वरः ।

स्मृत्वाऽद्यापि यदीयबाहुपरिघप्रेङ्खोल्लनानामसौ,
कैलासः पवनावधूतविटपिव्रातच्छलाद् वेपते ।
शक्रातिक्रमकृच्च यस्य चरितं गायन्ति नाकाङ्गना,
साकाङ्क्षं समराय राक्षसपतिः सोऽयं पुरः प्रेक्ष्यताम् ॥ ६४ ॥

**रामः**—सखे ! त्रिभुवनाभिभावुकेन तेजसा दशभिः शिरोभिर्विशाल्या भुजैरज्ञापितोऽपि विज्ञायत एवायं निशाचरचक्रवर्ती । (इति रावणं निपुणमन्विष्य पुनः सश्लाघम्) सखे विभीषण ! शृणु समीचीनमस्मदीयं वचः—

उत्पत्तिर्विमले विरिञ्चिनि कुले दुर्वारवीरस्मया-
ऽपस्मारप्रतिकारभेषजभुजोद्भूतप्रतापं वपुः ।
वक्तुं शक्य च साहसं यदि स दिग्नासा शिरः पूजितो,
जानीते तदयं स्वयं समजनि स्तुत्यः पुलस्त्योद्भवः ॥ ६५ ॥

अपरं च—

देशे देशे ककुभि ककुभि क्ष्माधरे दमाधरे च,
ग्रामे ग्रामे पुरि पुरि चिरं यस्य जागर्ति कीर्तिः ।
दृष्टः स्वामी स पिशितभुजां यद्यसौ हन्त ! मद्य,
दृष्टेनैव तदिह विहरेचक्षुरक्षुद्रमेव ॥ ६६ ॥

**विभीषणः**—देव ! न सर्वकालं सदृशान्येव शरीरभाजां भागधेयानि भवन्ति ।

**रामः**—(तुमुलमाकर्ण्यावलोक्य च) कथमेभिर्गतिरनवच्छिन्नैरन्योन्यमुपक्रान्तेव रण प्रकरणप्रस्तावना । तथाहि—

उद्गर्जन्नूर्ध्वरवरोपितरोमराजयः,
शालोन्मानि त इमे समराय राक्षसाः ।
लङ्कापुरीपरिसरे प्रसरन्ति सत्वर,
शाखामृगाश्च मृगराजसमानविक्रमाः ॥ ६७ ॥

---

1 'विश्वन्तद्ध' आ० । 2 'बरोपित' आ० ।

सखे निभीपण ! तदिदानीं प्रत्युत्थानीय एनायं समरातिथिर्निशीथिनीचरनाथ ।
([1]इत्यभिधाय सर्वे निष्कान्ता ।)

॥ इति षष्ठोऽङ्कः समाप्तः ॥

---

जीमूतवाहनेन च[2] शैलेनेर च समुन्नतिं दधत ।
स्यादश्वराजसूनोरहिमवता हिमवता समता ॥ ६८ ॥

---

1 इत्युपाय सर्वे मा० । 2 च शैलेन समं समु' मा० ।

## सप्तमोऽङ्कः ।

( ततः प्रविशति [1]चारपुरुषः । )

[1]चारपुरुषः—समादिष्टोऽस्मि मथुराधिनाथेन महाराजलवणेन रामरावणयो रणवृत्तान्तपरिज्ञानार्थं लङ्कागमनाय । यदसौ प्रियसुहृद दशकन्धरमनुरुध्यमानो मान्धातृ वधविरोधितेषु रघुवंशसम्भवभूपालेषु विशेषतो वैरायते । तदिदानीमस्तत्प्रभु प्रहस्तधूम्राक्ष महोदरप्रभृतिप्रधानयातुधानधुरन्धरक्षपण रामपक्षमारण्ये निर्गर्णवदन निश्चित् कुम्भकर्णे पराक्रमप्रकर्षेण समाधास्यमानमानसो निवृत्ते ।

> क्षिप्ता कक्षाभ्यन्तरे वानरेन्द्र, लङ्कामध्ये कुम्भकर्णे प्रविष्टः ।
> तेनोद्‌न्तेनामृतेनेव सिक्त, स्वामिस्वान्तः शान्तसन्तापमास्ते ॥ १ ॥

( इति परिक्रामन् पुनः सविमर्शम् ) सुष्ठुतर च तेनैतदनुष्ठित वीरवरिष्ठेन वज्र ज्वालानलभेन । यतः—

> वालिविरचित कक्षानिक्षेपं रावणस्य सस्मृत्य ।
> तदवरज तदवरज क्रुधा न्यधचेट् त स स्ते ॥ २ ॥

( पुरो विलोक्य च ) सोऽयं लङ्कापुरीपरिसरः । तदिह गूढचरविक्रमनिधानवानरयातु धानप्रधानसमाकुलितसकललोके स्वामिना स्वरेण कुम्भकर्णस्य प्रवृत्तिपरिज्ञानार्थं प्रथमप्रहित कूरमुख धाऽपि शब्दयामि । ( इति तथाकरोति । )

( प्रविश्य )

घृकमुखः—( पुर पश्यन् ) अये ! स एव प्रियसखः कार्पटिकः । वयस्य ! किमिति मामुद्दिश्य शब्दायसे ? ।

कार्पटिकः—त्वाम् निरयमि ? इति ।

घृकमुखः—कथमपरिज्ञातमत्प्रयोजनार्थं स्वामिनमुपतिष्ठामि ? ।

कार्पटिकः—तन्निवेद्य मुद्गरप्रहारमूर्च्छित सुग्रीवमादाय लङ्कान्त प्रविष्टस्य कुम्भकर्णस्य वृत्तान्तम् ।

---

1 2 चर° मा० ।

**वृकमुखः**—( सोद्वेगम् ) सखे ! किं पृष्टेन कथितेन वा दुर्दैवविफलीकृतपराक्रमोपक्रमाणामुदन्तेन ? । तथापि यथावृत्तान्तं कथयामि—ततः सङ्घटितचेतनः स प्लवङ्गमपुङ्गवः सकलपौरजनस्तवनामृतसपूर्यमाणकर्णस्य कुम्भकर्णस्य कर्णनासिकाविनाशं विधाय सत्वरमुत्प्लवमानः पुनरेव रामनिकटं जगाम ।

**कार्पटिकः**—ततस्ततः [1] ।

**वृकमुखः**—अथासावपि तथैव व्यावृत्य

व्यङ्गत्वं गमितः प्लवङ्गपतिना लङ्काधिराजानुजः,
क्षीणो राघवमार्गणव्रणगलद्रक्तासवेनाशनः ।
कीशांश्च क्षणदाचरांश्च गणशः कुर्वन्नुपान्तस्थितान्,
काकुत्स्थं ग्रसितुं प्रसारितमुखः सख्ये सरोषोऽभ्यगात् ॥ ३ ॥

**कार्पटिकः**—( सश्लाघम् ) अहो ! दर्पकोपातिशयः कोऽपि कुम्भकर्णस्य । ततस्ततः [2] ।

**वृकमुखः**—ततश्च ।

यावन्न राघवमसौ ग्रसते सशङ्कैः
स्तन्मूर्ध्नि मोक्तुममरैः प्रगुणीकृतो यः ।
पुष्पाञ्जलिस्तदनु सङ्गतकुम्भकर्णे,
काकुत्स्थ एव मुदितैर्मुमुचे स तावत् ॥ ४ ॥

**कार्पटिकः**—( सखेदम् ) हा त्रिभुवनैकसुभट कुम्भकर्ण ! भवदवसानमाकर्ण्य सोऽस्मत्स्वामी महाराजरावणो रावणाभ्युदयविषये निराशीभविष्यति । निश्चितं महाराजरावणोऽधुना—

सीतां रामं कुम्भकर्णं च शङ्के,
लङ्केशानः संस्मरन्नेककालम् ।
चित्ते कामक्रोधशोकानलाना-
मन्यां त्रेतामादधे स्वात्महव्यम् ॥ ५ ॥

ततस्ततः [4] ।

---

1 'स्मरान्। कीनाशान् क्षण' भा० । 2 एव मुमुचे मुदितैः स भा० । 3 'मी प्लवगमहाराजो राव' भा० । 4 'वणोऽपि सम्प्रति—सीतां भा० ।

**वृकमुखः**—ततश्च कुम्भकर्णवधामर्षित शक्रजिदभिचारहोमेन दिव्यमजेयं रथमुत्पादयितुकामो निकुम्भिलां प्रति प्रतिष्ठमानोऽर्द्धपथ एव लक्ष्मणेन धनुर्ज्याशरवराजाज्ञया प्रतिषिद्धः ।

**कार्पटिकः**—ततस्ततः [?] ।

**वृकमुखः**—ततश्च स मन्दोदरीनन्दनः कोपकम्पिताधरोष्ठपल्लवो लक्ष्मणसमीपे विभीषणमवलोक्य नियतमेतास्मदीयं रहस्यमिदमावेदितमनेनेति तावुभावपि प्रति अभियोद्धुमारेभे—

त्वं मे तात इवासि तत् कथमिदं शत्रो पुरः प्रोक्तवा-
नस्मन्मर्म [?] न धर्म एष महतां किं प्रश्रयेणाथवा [?] ।
आः ! तिष्ठेति विभीषणे च परुषां वाचं विमुञ्चन्नसौ,
बाणालीमितरत्र च प्रणिहितां सौमित्रिणा रावणिः ॥ ६ ॥

**कार्पटिकः**—(सखेदम्) सखे ! तदेतदपि प्रत्यर्थिमथनैकमनोरथस्थानमात्मनो दुर्दैवेन भग्नमवगम्य किमनुष्ठितं दशकन्धरेण [?] ।

**वृकमुखः**—तेन च प्रियपुत्रविपत्तिवार्ताविरचितमूर्च्छावसाने भूयस्तरामिति निवेदितम्—

वत्स ! त्वयाऽस्मि विजयी द्विभुजैकमूर्द्धा,
मौलीन् वहन्नपि दश द्विगुणांश्च बाहून् ।
तत् किं प्रयातकुतुकावसरं विहाय,
निद्रां भजाननुभवन्त्यपुनःप्रबोधाम् [?] ॥ ७ ॥

**कार्पटिकः**—ततस्ततः [?] ।

**वृकमुखः**—तदनन्तरमुद्वेलशौर्यसागरात्ययावाहितशैवलिनीप्रवाहो बहुतराणि वानरनिकुरम्बकाणि संहरन्नुत्त्रासयन्नगणयंश्च रणाङ्गणप्रणयिनं लक्ष्मणं शक्तिप्रहारविदारितवक्षःस्थलं क्षितिमण्डले निक्षिप्य राक्षसाधिपतिर्जितकाशी पुनरेव निजनगरीं प्राविक्षत् ।

**कार्पटिकः**—ततस्ततः [?] ।

**वृकमुखः**—ततश्च 'जितं जितम्' इति सानन्देषु क्रव्यादवृन्देषु 'हा ! धिक् कष्टम्' इति सशोकेषु वैमानिकलोकेषु 'भग्नं भग्नम्' इति सञ्जातदरेषु वानरनिकरेषु व्याहरत्सु—

---

1 °लां प्रविश्यमानोऽधनि मृत एव दे० । 2 °यमारो° भा० ।

तदेतदीयमार्गमवलोकयामि । (इति निष्क्रान्तः।)

**रामः**—(लक्ष्मणं निरीक्ष्य सनिःश्वासं सुग्रीवं प्रति) वयस्य किष्किन्धाधिपते !

अमुना सह बन्धुनाऽधुना, विगतोऽस्मि न हि सर्वथा व्यथा ।
न मया नृपतिर्विभीषणः, कृत इत्येतदरुन्तुदं तु मे ॥ १५ ॥

**विभीषणः**—(रामं प्रति)

विद्यालङ्कार ! किं लङ्काराज्यसिंहासनेन मे ?।
यदुन्नततरे प्राप्ता तव चित्तासने स्थितिः ॥ १६ ॥

**सुग्रीवः**—(रामं प्रति)

हे प्रतीक्ष ! प्रतीक्षस्व मारुतेरागतिं ततः ।
जीवितं लक्ष्मणे सीता त्वयि लङ्का विभीषणे ॥ १७ ॥

**रामः**—(दीर्घमुष्णं च निःश्वस्य) सखे शाखामृगशेखर ! दुर्लभा सम्प्रति विदेहराजात्मजा । (इत्यधोमुखस्तिष्ठति।)

**सुग्रीवः**—(सावष्टम्भम्) पृथग्जन इव धीरतामपाकरोषि—

किष्किन्धां व्रज निजबान्धवेन सार्द्धं,
चिन्तावान् किमसि ? पुरं हि तत् तवैव ।
हत्वाऽरिं यदि न ददामि देव ! तुभ्यं,
वैदेहीं तदहमहर्पतेर्न पुत्रः ॥ १८ ॥

(नेपथ्ये)

भो भोः प्लवङ्गप्रवराः ! प्रमोदध्वं प्रमोदध्वम्, यदायातः कृतकार्योऽयमञ्जनाशुक्तिमौक्तिकं संसारसागरोत्तरणमहायोगी लङ्कावृत्तान्तकथनप्रवेशद्वारं मारुतिः । तदिदानीम्—

सीतापतिर्विजयतां धर्मकृतामूर्मिरापनिम्नगस्तु ।
सरमापतिश्च नन्दतु रमापतिर्जायतामनृणः ॥ १९ ॥

(इति श्रुत्वा सर्वेऽपि हर्षं नाटयन्ति।)

**रामः**—(सानन्दम्) कथमयमार्यजाम्बवानाञ्जनेयागमननिवेदनामृतेन पुनरस्मानुज्जीवयति ! । (इति वाचयित्वा) सखे ! किमेतावदेवात्र लिखितम् ? (इति पत्रमर्पयति।)

**वृकमुखः**—( पट्टं गृहीत्वा ) वयस्य ! अतः परमतिहृदयोद्वेगजनकमिति न लिखितम् ।

**कार्पटिकः**—( सविमर्शम् ) नूनमञ्जनातनयेनोज्जीवितः सुमित्रासुतः । तदनन्तरं च किमभूत् ?।

**वृकमुखः**—

[ ;

] तत्पौरुषं व्याहरन् ।

यत् तस्याप्यरतिप्रदं न च मतस्पर्शेन यद् दूष्यते,
तेजस्तद् दधदिङ्गितैरनुमितं रामस्य रङ्गे स्थितम् ॥ २० ॥

**कार्पटिकः**—ततस्ततः ?।

**वृकमुखः**—ततश्च कृतपर्यङ्कबन्धं पक्षद्वयोपविष्टेषु वानरराक्षससुभटेषु, समराव लोकनकुतूहलोत्तानितलोचनेषु वैमानिकजनेषु, 'किं भविष्यति ?' इत्याकुलम्बितभालेषु दिक्पालेषु, स्वस्त्ययनसूक्तजपनिपुणे देवमुनिगणे, मन्दीकृतस्पन्दनप्रसरे भगवति भास्करे, दुर्विनीतनिजप्रपौत्रवधप्रतिविधातरि देवे विधातरि, शिथिलितसमाधिमुद्रे स्वामिनि रुद्रे च, परस्परमेकसुरभिसम्भोगाभिलाषयोरिव वृषभयोरिव, एकानोकहच्छायाश्रयणगजयोर्मत्तमतङ्गजयोरिव, एकगुहासद्मग्रहणबद्धाग्रहयोर्दृप्तसिंहयोरिव रामरावणयोरेकस्त्रीकारणा रणप्रवृत्तिरासीत् ।

**कार्पटिकः**—सखे ! धन्योऽसि येन तत् तादृशं समरकौतूहलमवलोकितम् । ततस्ततः ?।

**वृकमुखः**—ततश्च

हुङ्कारे प्रतिपर्वतप्रतिरवस्फारैर्दशानां दिशा
माशङ्कातिशयं दिशन् दशमुखः कोपेन रज्यन्मुखः ।
रामं वामकरावलम्बितधनुर्मौर्वीगुणास्फालन
क्रीडद्दक्षिणपाणिपद्ममभिनिक्षिप्तश्चकार शरैः ॥ २१ ॥

**कार्पटिकः**—ततस्ततः ?।

**वृकमुखः**—ततश्च—

पश्चात्पतत्सु निशिताहतिभिः शिरस्सु,
दर्पोदयेन तु पदेषु पुरः सरत्सु ।

१ 'तुर्दण्डदुणाक' ८० ।

निर्व्याजविक्रमनमस्यनमस्य तस्य,
रामश्चकार निधनं प्रधनाभिगमम् ॥ २२ ॥

**कार्पटिकः**—( श्रुत्वा सखेदम् ) हा लोकत्रयैकवीर ! हा रणाङ्गणापगणितसुनासीर ! हा विजयलक्ष्मीविलासावास ! हा दिग्दन्तिदन्तदलनोज्ज्वलीकृतचन्द्रहास ! हा निरहङ्कारीकृतसकलनिर्जरसमाज ! हा लङ्काधिराज[1] ! तवापि मनुष्यकृतमवसानं श्रूयते ? । ( इति शोचति । )

**वृकमुखः**—सखे ! यथार्थ[2]थाऽपि मरणधर्मिणि मर्त्यलोके किमयमेवमनवद्यविक्रमः शोच्यते ? यस्य[3] तदानीमपि—

तद् दूरेऽस्तु यदस्य राक्षसपतेर्गीश्चेदमत्यद्भुतं,
युद्धे वज्रधरं पराजयमथो तत्याज लज्जा निजाम् ।
दृष्ट्वा यस्य च [4]दुर्दमस्य दलनं सोऽपि त्रिलोकीभट-
श्रेणीमौलिमणिर्घृणाक्षरसमं मेने रघूणां पतिः ॥ २३ ॥

**कार्पटिकः**—भवतु । ततस्ततः ? ।

**वृकमुखः**—ततश्च तथाविपन्नस्य[5] राक्षसपतेरग्निसंस्कारं प्रति मन्दायमानं विभीषणं दाशरथिरित्यवादीत्—सखे ! न खलु कुलाचारः परिहर्तव्यः । तदस्य ज्येष्ठभ्रातुर्दशकण्ठस्य समयसदृशमनुष्ठीयताम् । यतः—

प्राणापहारान्तमुशन्ति वैरं, निपातितं तत्सुहृदा त्वयेन ।
तत्साम्प्रतं ते स यथा तथा मे, कालोचितं तत् क्रियतां तदस्य ॥ २४ ॥

( अथ विहितरावणाद् वैदेहिकेन विभीषणेन हनूमता च रामाज्ञया प्रसाधितशरीरा सीता तत्समीपमानीता । )

**कार्पटिकः**—ततस्ततः ? ।

**वृकमुखः**—ततश्च—

दृष्ट्वा चिराद् उषितमस्तसमस्तखेदा,
मत्वाऽन्यथा तमथ भीतिमती च सीता ।
स्वेनैव राक्षसगृहस्थितिदोषशङ्का
शान्त्यर्थमर्थयति वह्निनिवेशदिव्यम् ॥ २५ ॥

---

1 °ज ! हा रावण त° दे० । 2 °था वा म° भा० । 3° स्य दृष्ट्वा° दे० । 4 दुर्मदस्य भा० ।
5 °स्य यातुधानाधिप° भा० । 6 °ष्ठस्य भ्रा भा० । 7 °णस्योर्ध्व° भा० ।

तदनन्तर रामभ्रूसंज्ञाप्रेरिते प्लवगवृन्देरानीयमानेषु दारुनिकरेषु भवदाह्वानमाकर्ण्य सोऽस्मिहाऽऽयातवान् ।

( नेपथ्ये )

भो भोस्त्रिभुवननिवासिन पुरुषा ! सेयं रत्नावती जनकरानात्मजा लक्ष्मणमुखेने दमभिधत्ते—

मातर्मेदिनि ! देव दीधितिपते ! सर्वेऽप्यधीशा ! दिशाम्,
एषा विज्ञपयामि च शृणुत हे विज्ञा ! प्रतिज्ञामिमाम् ।
काकुत्स्थसुतमन्तरेण मम यद्यन्योऽपि कश्चित् पुमा
श्चित्ते कर्मणि वाचि वाऽस्ति तदयं वह्निर्दहत्वाशु माम् ॥ २६ ॥

**शूकमुखः**—( श्रुत्वा ) कदाचिदियं प्रविशति हुताशने सीता ।

**कार्पटिकः**—( नेपथ्याभिमुखं दर्शयन् ) ननु प्रविष्टेव । तथाहि—

हाहारवर्गभितमुखेषु नरीसुरेषु
वैमानिकेषु नयनोदकमुत्सृजत्सु ।
व्योमाङ्गणाक्रमणकातुरदत्तफालं,
ज्वालाकलापमवलोक्य पावकस्य ॥ २७ ॥

**शूकमुखः**—अतिहिंसारणमिदमाचरितं रामभद्रेण । ( पुनराकाशे )

दिष्ट्या मुञ्चत पुष्पवृष्टिममराम्नायावधः सम्प्रति ,
प्रीतिं पुष्यतु दिव्यदुन्दुभिरवस्तूर्णं च कर्णद्वये ।
पुष्पाणामपि ताडनं न सहते मृद्वी यदीया तनु
र्वैदेही दहनेऽपि साऽद्य निहिता शुद्धा न दग्धा यतः ॥ २८ ॥

अपरं च—

श्लाघ्यः स राघवयुवा प्रभवो यस्य,
न न्यायनिष्ठुरतरे हृदि पुष्पचापः ।
धन्या च सा जनकभूज्वलनप्रवेश-
भीतिं निगाय निजशीलबलेन याऽस्मिं ॥ २९ ॥

---

1 °सहाया मे° भा० । 2 °नक्षत्रा ह° भा० । 3 शिरधे मात° भा० । 4 दहन प्रावर्त निरगाच्छुद्धा भा० ।

**कार्पटिकः**—(श्रुत्वा) सखे ! [1]शुद्धेव तावदवनिसुतेयम् । तदिदानीं किमपरेण [2]। गच्छतु भवान् मथुरायाम् । अहं पुनरग्निविशुद्धां वैदेहीमवलोक[3]यामि । (इति परिक्रामति ।)

(वृद्धमुख्यो निष्क्रान्तः ।)

(ततः प्रविशति कृतनीराङ्गिका चरणाङ्गुष्ठनिविष्टदृष्टिं सीतामुत्सङ्गे वहन् वैश्वानरो विभीषणसुग्रीवसहितौ रामलक्ष्मणौ हनुमांश्च ।)

**वैश्वानरः**—(रामं प्रति)

इयं मूर्त्यन्तरेण श्रीरियं तीर्थं हि जङ्गमम् ।
भूयोऽपि वत्स ! वैदेहीं देहार्द्धे तदिमां कुरु ॥ ३० ॥

(इति सीतामर्पयति ।)

**रामः**—(सप्रमोदप्रश्रयमञ्जलिं बद्ध्वा मौलिकमले विनिवेशयन्) यदादिष्टं विष्टपैक गुरुणा तत् तथा समर्थितमेव ।

(सर्वेऽपि रामसमीपस्थिता सीतामवलोक्य हर्षं नाटयन्ति ।)

**कार्पटिकः**—(सीतां निर्वर्ण्य) अहो ! काऽपि कमनीयता विदेहदुहितुः । तथाहि—

मन्ये महानन्दपदं तदेतदितरनिम्नं शशिबिम्बमुख्याः ।
यस्मिन्नवस्थाय तथाहि सुस्थैर्नेत्रे पुनर्नाऽऽवृते नराणाम् ॥ ३१ ॥

(पुनः सेर्ष्यम्) तदहमयोध्यामपि गत्वा निजनायकाभिप्रायवेदी यथा तथा वा दाशरथीनामपकर्तुं प्रयतिष्ये । (इति निष्क्रान्तः ।)

**हनूमान्**—(सीतामुद्दिश्य दैवं प्रति सोपालम्भम्)

यस्याः सच्चरितं त्रयेऽपि जगतां जागर्त्ति भव्याऽद्यम
व्यस्थानस्खलिताभिशङ्कितहृदयं प्रत्येति [4]था सर्वशः ।
साक्षात् साक्षिणि सव्यसाचिनिराकृतान्तरितेव स्थिते,
साऽप्यस्मादितराङ्गनेव निदधे दुर्वेधसा शुद्धये ॥ ३२ ॥

**सुग्रीवः**—अयि पवननन्दन ! स्थाने भवान् दैवमुपालब्धवानसि ।

(आकाशे)

---

1 शुद्धा तावदवनिसुता । स[5] मा० । 2 °नरपि विशु° मा० । 3 °कयिष्यामि मा० ।
4 जीवनम् मा० । 5 यस्याः स° द ।

वत्स दशकन्धरवधोन्मूलितत्रिलोकीहृदयशल्य ! कौशल्यासरसीसरोरुह ! यदिद वत्साया विदेहदुहितु सञ्चरित त्रिभुवनाभ्यन्तरवर्तिना धूमध्वनिनाभिहित तत् [1]तथैव मन्यताम् ।

( सर्वे श्रुत्वा सविस्म[2]यमालोकयन्ति । )

रामः—कथमयं भगवान्[3] ऋभुचक्रवर्ती सह् क्रन्दनो मदनुमहाय तातदशरथेन सम द्वित्राभिश्चामरहस्ताभिरप्सरोभिर्वीज्यमानो विमानस्थित इत एवाभिवर्तते[4] ।

( तत प्रविशति यथानिर्दिष्टो वासवो राजा दशरथश्च । )

रामः—( वासव प्रति सप्रश्रयम् ) [5]देवदेवाधिदेव ! पौलोमीपते ! दशरथसूनुरय रामभद्रोऽभिवादयति । ( इति वासव प्रणम्य दशरथ प्रणमति । )

☞ [6]( सर्वे वासव प्रणमन्ति । )

( सीता उभौ प्रणम्य लज्जावती रामान्तरिता तिष्ठति । )

दशरथः—( राम प्रति ) ←

एषा वधूर्वत्स ! कलङ्कपङ्क, नवेन्दुलेखेव न जातु धत्ते ।
शक्रप्रसादाच्च भविष्यतीयमपत्यमुक्ताफलताम्रपर्णी ॥ ३३ ॥

रामः—( सहर्षम् ) महान् प्रसाद । ( इति शिरस्य[7]ञ्जलिमारोपयति । )

वासवः—( राम प्रति ) वत्स दाशरथे ! श्रूयतामपरमपि एतस्या क्षितिदुहितुर्विप मनस्तत्त्वान्तरम्—

भवद्भीता सीता[8] हुतभविशदग्नावथ पर,
पुमान् सम्पृष्टोऽसाविति चकितचित्ता भृशमभूत् ।
त्यज त्रास वत्से ! गुरुरिव त[9]वाय च भगवा
निति व्याहाराभ्यात् पुनरभ[9]दाश्वस्तहृदया ॥ ३४ ॥

अपरमप्याकर्णय व्याहरणकारणम् ।

रामः—( सप्रश्रयम् ) समादिशतु देव ।

वासवः—ककुत्स्थकुलतिलक !

---

1 तथैव म° भा० । 2 °यमवलो° भा० । 3 °न् त्रिभुवनचक्र° भा० । 4 देवाधिदेव ! दे० । 5 इतश्चिह्नात् तर्गतोऽयं पाठ दे० नास्ति । 6 °भ्यामर्पयन् भा० । 7 °ता हुत° दे० । 8 °वाऽऽयाहि म° भा० । 9 °दाश्वस्तहृद° दे० ।

वैदेहेन ममाविनाधिनपुनर्दत्ताग्रहेणाऽऽग्रहं ,
सर्वम्नेन निरस्त आत्मदुहितुः स्नेहानुबन्धं विना ।
तामात्मीयकृता पिशाचपतिना जातोऽस्मि जीवन्मृत ,
श्रुत्वाऽग्नौ निहिता सतीमपि तन प्राणानसौ हास्यति ॥ ३५ ॥

**वैश्वानरः**—( राम प्रति ) वत्स राम! श्रुत यदादिष्ट त्रिविष्टपाधिपेन! । तदविलम्बितमेव कोऽपि विपुलमतिस्त्वरितगतिश्च मिथिलाधिनाथप्रतिबोधनाय[1] प्रेष्यताम् ।

**सीता**—( श्रुत्वा सास्रम् ) हा ताद! अज्ज वि अहं ज्जेव जीविदसंदेहदाइणी मनुत्त म्हि[१] । ( इति रुदन्ती हनुमन्मुखमवलोकयति । )

**हनूमान्**—( सीताभिप्रायमवगम्य ) देवि! कृतमनिर्वृत्या । द्रुततरमहमेव गत्वा जनकमहाराजमानन्दयिष्यामि । ( इति निष्क्रान्त । )

**लक्ष्मणः**—( हनूमन्त गच्छन्तमवलोक्य मनसि प्रकम्पमानाङ्गो )

मन्ये रामाय निमाय स्रष्ट! कष्टमत्र त्वया ।
अनुशय्य कृतोऽस्य तत्प्रतिकाराय मारुति ॥ ३६ ॥

**वासवः**—वत्स रामभद्र! तदेतदप्यस्तु—

ये वानरा सम्प्रति तावकीना , कीनाशवेश्मातिथयो बभूवु ।
जीवन्तु ते रोगगणविमुक्ता , युक्ता श्रिया सन्तु च मत्प्रसादात् ॥ ३७ ॥

( इत्यभिधाय दशरथेन सह तिरोदधे । )

**रामः**—( विलोक्य ) कथमयमस्मासु मनोरथादप्यधिकतर प्रसादफलमारोपयन्नप्रत्यक्ष[2] संवृत्तो भगवान् सहस्राक्ष! ।

**वैश्वानरः**—( राम प्रति )

भगवन्ननिनाशाद् दिक्पतीना स्थाना,
दशरथसुत! चक्रे दुर्दशान्तस्त्वया तत् ।
दशशतकरचक्षु श्रीपदत्राशिषस्ते,
दश तु भुजभुजङ्ग सद्गरम्यानरातीन् ॥ ३८ ॥

( इत्युक्त्वा निष्क्रान्त । )

---

१ हा तात! अद्यापि अहमेव जीवितसंदेहदायिनी संवृत्ताऽस्मि ।

---

1 °नार्थं प्र भा० । 2 °रोपय भा० ।

**विभीषणः**—(नेपथ्याभिमुखमवलोक्य) कथमयमवन्ध्यनामा वृद्धामात्यः सत्वरमिहागच्छति[1] ।

(ततः प्रविशत्यवन्ध्यः ।)

**अवन्ध्यः**—(रामं प्रणम्य सविनयम्) देव ! विज्ञपयन्ति प्रकृतिपुरुषाः—प्रगुणीकृता खल्वसौ लङ्काधिराज्यसिंहासनाध्यासनसामग्री, तदनुजानातु देवः कुमारविभीषणमभिषेकग्रहणाय ।

**रामः**—(विभीषणं प्रति) सखे ! सफलीक्रियतामियं कुलपुरुषप्रार्थना ।

**विभीषणः**—(पाणी सम्पुटीकृत्य) स तावदतिवाहितो दशरथादिष्टो वनवासव्रतावधिः । तदिदानीमेवैव तत्रभवति देवे स्वीकृते साकेतसाम्राज्याभिषेके पश्चान्ममापि लङ्काधिपत्यप्रतिष्ठा समुचिता भवति ।

**रामः**—सखे राक्षसराज ! नेदमयुक्तम् । तथापि पश्यतु भवान्—

धत्तेऽधुनाऽपि भरतः पटलं जटाना-
मश्रुच्छटाच्छुरितनेत्रपुटश्च सचिन्त्य ।
नास्मद्गुरुश्च मुनिरत्र तदेष पात्रं,
राज्यश्रियः प्रथमतोऽपि कथं भवामि ॥ ३९ ॥

**विभीषणः**—देव ! तर्हि कपीश्वरसुग्रीवकुमारलक्ष्मणयोर्मया मम लङ्कागमनानुग्रहप्रसादोऽस्तु[2] । अपरेऽप्यङ्गदजाम्बवदादयो वनचरमुख्या मदीयसत्कारग्रहणार्थं समादिश्यताम् ।

**रामः**—भवत्वेवम् ।

**सुग्रीवः**—(रामं प्रति) देव ! लङ्केश्वरसत्कारग्रहणादनन्तरं सर्वेषामपि वानराच्छभल्लानां निजनिजदेशं प्रति प्रस्थापनादेशो भवतु ।

**रामः**—(क्षणं विचिन्त्य) सखे सुग्रीव सूर्यसम्भव ! ते खलु स्वस्थानगमनोत्सुकाः शाखामृगा मद्वचनैव सम्भाष्याः —

युष्माभिर्यदुपकृतं न तस्य पश्यामि निष्क्रयं क्वापि ।
तद्दृष्टो वानरवीराः ! बहुमन्तव्यो मम स्नेहः ॥ ४० ॥

**सुग्रीवः**—यदादिशति देवः । (इति रामानुमतलक्ष्मणसुग्रीवाभ्यां सह विभीषणो निष्क्रान्तः ।)

---

1 दन्तोऽथाकृतिमात्रा° भा० । 2 °गमानु° भा० ।

**रामः**—( सीतां करे गृहीत्वा ) प्रिये ! मयैवं दुर्विकल्पवता भृशं क्लेशिता भवती।

**सीता**—ण हु अज्जउत्तेण, अत्तणो दिव्वेण। (इति रोदिति।)

**रामः**—( सीताबाष्पमुन्मृज्य )

विप्रयोगेण शुष्काऽपि स्नेहेनोपचिताऽपि मे।
नोपर्बुधेन दग्धाऽस्मि भृशं मत्कृपया प्रिये ! ॥ ४१ ॥

अपि च—

म्लानं प्रिये ! माल्यमपि त्वदीयं, न वह्नितापेन मृदु महेन।
पतिव्रतामप्यव्रजाननम्रा, मनोऽनुतापेन तु तप्यते मे ॥ ४२ ॥

**सीता**—( संस्तनमाश्लिष्य )

निष्कारणं निगणिता निमिषं मयेति,
मा भूर्विषादभरनं मुखनैकनीर ! ।
दैवेन केनचिदहं दहने यदस्ता,
निस्तारिता तु भवतैव हृदि स्थितेन ॥ ४३ ॥

**रामः**—देवि ! मदशमिदं क्षमामभ्यनुज्ञस्य । [1]अपि च—

अप्येकं दधतानन्दं भवत्संयोगसम्भवम्।
अद्य वेद्मि स्वसुखं शतानन्दादपि प्रिये ! ॥ ४४ ॥

( नेपथ्ये )

देव दिवाकरकुलैकललाम राम ! तदिदं पुष्पकाभिधानं विमानमधिरुह्यतामयोध्यागमनाय।

**रामः**—( श्रुत्वा ) कथमसौ विभीषणो व्याहरति ? । देवि ! तदेनमभिनवभूपालमभ्युत्थानेन सम्भावयामि।

( इति निष्क्रान्ताः सर्वे )

॥ इति सप्तमोऽङ्कः समाप्तः ॥

धात्री प्रभूतधान्या यद्यपि वसुमानसौ च सविताऽस्ति।
पालयति वस्तुपाल प्रजा क्षुधा बाधितास्तदपि ॥ ४५ ॥

---

१ न खलु आर्यपुत्रेण. आत्मनो दैवेन।

---

1 °ण शुष्काऽपि दे०। 2 अपरं च मा०। 3 दे० आदर्श नास्त्ययं श्लोकः।

# अष्टमोऽङ्कः ।

( नेपथ्ये )

जयतु जयतु रामः क्षेमकृद् विष्टपाना-
मनिशमयमभीष्टां लक्ष्मणोऽप्येतु लक्ष्मीम् ।
भवतु च भुवि सीता स्फीतकीर्तिः, शुभाना
भवनमपि कपीन्द्रः कौणपेन्द्रश्च भूयात् ॥ १ ॥

देव दाशरथे ! सोऽयं दिव्यचारणगणस्त्वदीयदर्शनेन कृतार्थीकृतः सम्प्रति निजनिजस्थानगमनाय भवन्तमापृच्छते । यतः —

लोचनेन तव चारुपक्ष्मणा, लक्ष्मणाग्रज ! निरीक्षितोऽत्र यः ।
सम्मदेन महता स्वमुत्तमं, मन्यते स्म शतमन्युतोऽपि सः ॥ २ ॥

( ततः प्रविशति विमानस्थितो रामः सीतालक्ष्मणविभीषणसुग्रीवाश्च । )

**विभीषणः**—( पुष्पकं प्रति )

हे विमान ! पवमानमपि त्वं, पटुता गमयदात्मजवेन ।
भास्कराभिजनसम्भवभूपायत्तपत्तनसमीपमुपेहि ॥ ३ ॥

( इति सर्वे विमानोद्गतिं नाटयन्ति । )

**रामः**—देवि ! जनकराजात्मजे !

विमानं व्योमाग्रे व्रजति निजमाणिक्यनिकर-
प्रभार्पितप्रद्योतनकिरणजालाद्भुतमिव ।
इतस्था पश्यान सुमुखि ! नगरस्थानुच्चगणान्,
गिरीन् मुष्टिग्राह्यान्, प्रतनिमगम्यांश्च जलधीन् ॥ ४ ॥

( उन्निद्रनेत्रः सन् ) अमुं विमानमध्यगतं भगवन्तमुद्दामितत्रिभुवनालोकमुपश्लोकयामि । ( अञ्जलिं बद्ध्वा )

1 [illegible] आ० । 2 [illegible] दे० । 3 [illegible] आ० ।

पुष्णातु प्रमदं प्रभुः स भगवानुष्णद्युतिर्यत्कृपा-
दृक्पातामृतसारणिप्रणयिनि क्ष्मालोकलीलायने ।
आविर्भूतनखाङ्गुलीकिसलया मुच्छायता निश्चितं,
शोभन्ते मनुवंशजा द्रुततरं रोगान्निरुग्णा अपि ॥ ५ ॥

**सीता**—( सूर्यं प्रणम्य रामं प्रति ) अज्जउत्त ! कहिं सं वाणररक्खसाणं पाणावसाणकरो संगरो संवुत्तो [1] ।

**रामः**—( अङ्गुल्या निदर्शयन् )
तामेतां विद्धि युद्धावनिमवनिसुते ! [1]यत्र नक्तंचराणा-
मक्षीणे शोणितौघैरयमजनि महानेष स्पष्टमब्धिः ।
यन्मध्ये स्वल्पमध्ये ! कपिकुलदलितानन्तदन्तीन्द्रदम्भा
जम्भारातेर्भयेन स्थित इव निवहः सर्वतः पर्वतानाम् ॥ ६ ॥

**लक्ष्मणः**—( सीतां प्रति ) देवि दशरथस्नुषे ! परिभाव्यतामितः—
उज्जीवितगतवानररक्ताद्र्धोऽयं समितिमहीमूर्द्धा ।
कचमेचकमृतराक्षसखचिताद्र्धो भाति सललितिरिव ॥ ७ ॥

( सीता दृष्ट्वा स्मयते )

**सुग्रीवः**—( रामं प्रति ) स्मरति देवो यदत्र तेनारुणात्मभिराचरितम् [2] ।

**रामः**—सखे ! कृतममुना वृत्तान्तेन ।

**सीता**—[3]अज्जउत्त ! केण कारणेण एस वाणरेसरो जवतो णिवारीयदि [4] ।

**रामः**—( सवैलक्ष्यम् ) प्रिये ! श्रूयताम् । इह हि—
मायाहृतामपि मृगाक्षि ! मृतिं त्वदीयां,
सत्यां विदन् न सहसैव मृतोऽस्मि यस्मात् ।
व्रीडानतस्तदहमेष मृषानुरक्तः,
शक्तो न दर्शयितुमात्ममुखं पुरस्ते ॥ ८ ॥

१ आर्यपुत्र ! कुत्र स वानरराक्षसानां प्राणावसानकरः संगरः संवृत्तः ? ।
२ आर्यपुत्र ! केन कारणेन एष वानरेश्वरः जवात् निवार्यते ? ।

1 यत्र राक्षस॰ भा॰ । 2 ॰नवानरैरिह रिक्तार्द्ध द॰ । 3 ॰कराः स्वानां मा वचनादा भा॰ । द॰ । 4 ॰सरो वज्जरेन णि॰ भा॰ ।

**सीता**—अज्जउत्त[1] एसो वि जणो एत्थ समाणावराहं ज्जेव ।

**रामः**—(विमृश्य) प्रिये ! कदाचिदस्मदीयमपि कृतविलक्षं शिरस्तत्राग्रे तैर्दुरात्मभिर्दर्शितं भविष्यति ।

**सीता**—(सगद्गदम्) अज्जउत्त[2] ! किं तुयं तुम्हाण पुरओ पिचारेमि ? । (शिरस्यञ्जलिं बद्ध्वा) णमो पियसहीए तिजडाए, जीए तया तेहिं तेहिं पच्चायणावयणेहिं समस्सासिय समस्सासिय पुणो वि अ अज्जउत्तमुहचंददंसणचरी कद म्हि ।

**रामः**—(अन्यतो दर्शयन्)

अम्मिलिन्दुमुखि ! स्थले छलविदा पुत्रेण लङ्कापते-
रसह्यन्धनिरन्धनानि फणिनः फूत्कारिणः प्रेषिता ।
ध्यातायातपतत्रिपुङ्गवभयान्नेशुर्निगूढं च ते,
निन्दन्तो निजमौलिमण्डनमणिश्रेणिप्रकाशं निशि ॥ ९ ॥

(पुनरन्यतो दर्शयन्) प्रिये ! शृणु वाचान्तरम् । इह हि—

दैवात् तत्र जगत्त्रयैकसुभटे दर्पोत्कटेन्द्रद्विप-
क्षोदोन्मादसमेतचेतसि गते मोक्षाय रक्षःपतौ ।
बाष्पैर्बन्धुविपत्तिशोकगलितैः शान्तप्रकोपानलः,
क्रन्दत्येष विभीषण ! सकरुणं सास्रं व्यधान्नामपि ॥ १० ॥

**लक्ष्मणः**—(राम प्रति) देव !

कारणनिवृत्तोऽपि पुनः प्रकृतिं प्रतिपद्यते जनः स्निग्धः ।
सलिलं वह्नेस्तापात् तप्तं पुनरेति शीतत्वम् ॥ ११ ॥

**रामः**—(दूरतो दर्शयन्) देवि ! वसुन्धरासम्भवे ! दृश्यतामिदमस्मदीयपूर्वपुरुषस्य सगरचक्रवर्तिनः पूर्वधर्मनिर्माणम् ।

अम्भोधिर्भगवानयं जयति यः कल्पान्ततल्पं हरे-
र्यस्त्रेधाकुसुमोपमः पशुपतिर्धत्ते विधुं मूर्द्धनि ।

---

१ आर्यपुत्र ! एषोऽपि जनः अत्र समानापराध एव ।

२ आर्यपुत्र ! किं युष्मान् युष्माकं पुरतः कथयामि ? (?)। नमः प्रियसख्यै त्रिजटायै, यया तदा तैस्तैः प्रलापनावचनैः समाश्वास्य समाश्वास्य पुनरपि आर्यपुत्रमुखचन्द्रदर्शनचरी कृताऽस्मि।

1 °एषोऽपि क भा० । 2 यत मुर्धा धि° भा० । 3 °स्तापादपास्नम्यात भा० ।
4 वसुधासम्भ° भा० ।

यद्वृत्तामृतहन्तकारक्वलोन्मत्त पति स्वर्गिणा,
यज्ज्ञातदुमनानने विहरति स्त्रैणेन यज्जन्मना ॥ १२ ॥

तत् प्रणम्यतामसौ ।

( सीता तथाकरोति । )

**विभीषणः**—( राम प्रति ) देव ! परिभाव्यताम्—

वृद्धस्य वारिधेरस्य पोतैश्च प्रतारितैः ।
जनो गृह्णाति धूर्तोऽयमप्यन्त स्थगित वसु । १३ ॥

**रामः**—( स्मृत्वा ) सखे राक्षसाधिप ! क्वचिदमर्त्यभावेऽपि मर्त्यधर्मव्यवहारो दृश्यते । तथाहि—

गङ्गा समुद्रदयिता धृता हरेणास्य सोऽप्यधत्त विषम् ।
इत्याततविभाव परस्परेणोभयोरभवत् ॥ १४ ॥

( समन्तादवलोक्य सीता प्रति )

जम्बूद्वीपस्याभितो वर्तमानश्चक्राकार सागरोऽय चकास्ति ।
यत्सम्पृक्ता वाहिनीना प्रवाहा, शोभामन्त सुभ्रु ! निम्नस्वरीणाम् ॥ १५ ॥

**सीता**—( पुरो विलोक्य ) अज्जउत्त ! किं णेद सागरसिरीए सीमतमरिच्छ पिक्खीयदि [१] ।

**रामः**—( दृष्ट्वा )

रक्षोराजस्यायमुत्पातकेतु,
कीर्तिस्थान शाश्वत वीरकेतु ।
त्वद्वक्त्रेन्दुप्रेक्षणानन्दहेतु,
सीते ! साक्षाद् दृश्यते सिन्धुसेतु ॥ १६ ॥

( सीता सेतु प्रणमति । )

**रामः**—देवि ! सम्पादनसमयसमुद्भूतसम्भ्रमस्य तस्य तुषारगिरिसरिसूनोरवस्थाविशेषमेव सम्भावयामि—

---

१ आर्यपुत्र ! किमिद सागरश्रियाः सीमन्तसदृशं प्रेक्ष्यते [१] ।

---

१ लक्ष्यते सा० ।

क्षिप्तानां जलधिजले प्लवङ्गवृन्दैः,
शैलानां कुलसुहृदां परःशतानाम् ।
प्रत्येकं कुशलकथानुयोगखिन्नः,
मैनाकः श्वसिति नूनमात्मकण्ठम् ॥ १७ ॥

**लक्ष्मणः**—(रामं प्रति) आर्य ! स एष दर्शनमात्रपवित्रीकृतत्रिलोकीलोकः सरस्वतीसागरसङ्गमः प्रणम्यताम् इति ।

(सर्वे तथा कुर्वन्ति ।)

**सुग्रीवः**—(विमृश्य) नियतं भगवत्याः पितामहदुहितुः सन्निधानादौर्वे सर्वमपि ज्योतिषि सञ्जम्भे । तथाहि—

स मकरराशिरुदन्वान् सरस्वती मीनराशिमती ।
सङ्गमसमुचितमनयोर्मन्ये किल वाडवश्चन्द्रे ॥ १८ ॥

**विभीषणः**—अपरमप्यहमेव निवर्णयामि—
नूनं प्रभूतास्वपि वाहिनीषु, कलिन्दकन्या बहुमन्यतेऽब्धिः ।
यद् भूरिभार्यैर्गृहिभिः सतृष्णा, कार्या विशेषप्रतिपत्तिपात्रम् ॥ १९ ॥

**रामः**—(सीतां प्रति) स एष महेन्द्रनामा महीधरः पुरतो दृश्यते—
सम्पातिः क्षितिभृत्यतिः स पतगस्तापेन तिग्मद्युते-
र्यत्रोवास गतोऽस्मानतमनस्क्लिष्टाननो यः पुरा ।
त्वां सन्दर्श्य दशाननाश्रयगतां प्राणान् दिशन्नाप्तवा-
नत्रामुत्र च सद्गतिं नरभवत्पिण्डापपुण्योदयात् ॥ २० ॥

**सीता**—अज्जउत्त ! को एस सम्पादिणामा पक्खिवरो[१] ।

**रामः**—देवि ! श्रूयताम्—
तस्याग्रजः सम्भृतस्य जटायुषोऽयं,
रे ! निष्ठ रे ! न भवसानि वच प्रजल्पन् ।
दृष्ट्वा छलेन भवतीं जननन्दिनीं
स्वापनेऽप्यकुत गरुन्निश्चयार ॥ २१ ॥

१ आर्यपुत्र ! क एष सम्पातिनामा पक्षिवरः ?

**सीता**—( स्मृत्वा सगद्गदम् ) एसो तस्स महाभाअस्स दहरहसरिच्छस्स जणअ-सरिच्छस्स वा ।[1]

**लक्ष्मणः**—( राम प्रति ) परिभाव्यतामित—

किष्किन्ध इत्यभिधया धरणीधरोऽयं,
यस्मिन् स वासविरवास कपिप्रवीर ।
मा चण्डभानुतनुजन्मवरप्रकाण्ड-
शक्तिर्यदीयभुजदण्डबलानुकल्पा ॥ २२ ॥

**रामः**—( सशिरःकम्पम् ) वत्स ! वचनागोचरस्तस्य वालिनः सङ्क्रन्दननन्दनस्य पौरुषप्रकर्षः । तथाहि—

निबिडनिर्पीडननिगडितसुमनाश्वाससदुःस्थितं तस्थौ ।
स जगत्त्रयी नृचशा यक्षादुरे हरेर्यस्य ॥ २३ ॥

**सुग्रीवः**—( राम प्रति सविनयम् ) देव ! सेयं भवदीयप्रसादसम्पादिता मदीयराजधानी । तदियमिदानीमानीयता प्रमोदातिशयं प्राघूर्णकग्रहणव्यपदेशागतस्य देवस्य दर्शनेन ।

**रामः**—( सीतां दर्शयन् ) सखे ! किमस्मात्कमियताऽपि प्राघूर्णकेन कृतेन न सन्तुष्यति प्रियवयस्य ? ।

( सुग्रीवो लज्जां नाटयति । )

**रामः**—वयस्य ! किमपि प्रार्थनीयमस्ति ।

**सुग्रीवः**—देव ! नियोजनीये जने का नाम प्रार्थना ? । समादिश्यताम् । ←

**रामः**—वयस्य प्लवगपते ! मम शान्तिसम्पादनवाञ्छनाऽपनोदार्थं तन्मनुरक्तोऽयं युवराजपदेऽभिषेक्तव्य ।

**सुग्रीवः**—देव ! मया भवदभिप्रायमवगच्छता प्रथमतोऽपि समर्थित एवायमर्थः ।

**लक्ष्मणः**—( सीतां प्रति ) देवि विदेहराजनन्दन ! सोऽयं सुरसुन्दरीसम्भोगसम्भ्रम-सम्पादनकल्पो माल्यवान् नाम पर्वतः प्रेक्ष्यते । यत्र पयोदागमसमयमसहनीयतमे भवद्विरह-विधुरेण देवेन दाशरथिना किं नाम नाऽऽचरितम् ? । तथाहि—

१ तस्यास्य महाभागस्य दशरथसदृशस्य जनकसदृशस्य वा ।

1 [illegible] भा० । 2 इत्यत्र पत्रे १५ टिप्पणी २ । 3 निदाघ जन भा० ।

आर्येण मोचादलकोमलेन, विमुञ्चता बाष्पजलं सशब्दम् ।
नवाम्बुवाहाऽनुकृतिः कृताऽन्या, तडित् तु नत्वं स्फुरिताऽस्य पार्श्वे ॥ २४ ॥

**सीता**—( सगद्गदम् ) वच्छ ! तए वि ण णिवारिदो दुक्खं णित्थरंतो अज्जउत्तो[१] ? ।

**रामः**—( [1]स्मित्वा ) प्रिये ! का नाम तस्मादस्माकं दुःखनिवारणा ? । यस्य प्रत्युत—

अगाधे त्वद्वियोगाब्धौ लक्ष्मणस्य निमज्जतः ।
हस्तालम्बं [2]पुनर्यच्छन् विसस्मार स्वमप्यहम् ॥ २५ ॥

**सीता**—( दृष्ट्वा ) अज्जउत्त ! को एस विसेसमणोहरो विअ[3] अवलोईअदि[२] ? ।

**रामः**—देवि ! तदिदं [4]पवित्रतरपात्रमाश्रममण्डलम्, यत्र किल बलिच्छलनादनन्तरं स भगवान् वामनमूर्तिः निजरूपं तप्यमानः स्वयमागत्य दैत्यगुरुणा भृगुपुङ्गवेनैवमुपालब्धः —

स्वामिन्निन्दिरानापते ! गमयता पातालमूलं बलिं,
स्वस्याऽस्य भवता रघुत्तमपदं स्पष्टीकृतं केवलम् ।
यस्मादेष पुरः स्थितेऽर्थिनि जगन्नाथे त्वयि क्षोणिका-
ऽमात्रो सर्वजनलज्जया स्वयमधो गन्तुं [5]ततोऽधीच्छति ॥ २६ ॥

**लक्ष्मणः**—( सचमत्कारम् ) अहो ! महती काऽपि तस्य दानवपतेर्दानरसिकता । तथाहि—

कमलाकरकमले बलेरिलामण्डलं तदा ददतः ।
आनन्दाश्रु प्रथमं पपात, दानोदकं पश्चात् ॥ २७ ॥

**सीता**—( दूरादवलोक्य ) अज्जउत्त ! को एस कप्पासरासिपण्डुरसिहरसहस्सो महागिरी पेक्खीयदि[३] ? ।

**रामः**—प्रिये ! सोऽयं सर्वपर्वतसार्वभौमः पार्वतीपिता हिमवान् । तथाहि—

तावल्लावण्यलक्ष्मीं कलयति मलयस्तावदद्रिं [7]करोति
क्रौञ्चश्वेतोहरत्वं हरधरणिधरस्थानकम्ये त्वमिश्याम् ।

---

१ वत्स ! त्वयाऽपि न निवारितं दुःखं निस्तारयन् आर्यपुत्रः ? ।
२ आर्यपुत्र ! क एष विशेषमनोहर इव अवलोक्यते ? ।
३ आर्यपुत्र ! क एष कर्पाससमूहपाण्डुरशिखरसहस्रः महागिरिः प्रेक्ष्यते ? ।

1 दृष्ट्वा दे० । 2 पुनर्य भा० । 3 य पग भा० । 4 पवित्रकपात्रमा भा० । 5 ततोऽपीच्छ भा० । 6 यतु दे० । 7 करोतु दे० । 8 त्वयमि दे० ।

तावद् गर्वं [1]सुरक्षितिभृदपि दधात्युद्धतं च विन्य-
म्नावद् धत्ते धरागापतिरतिरुचिरो दृश्यतेऽसौ न यावत् ॥ २८ ॥

**लक्ष्मणः**—आर्य ! स किल तादृशः स्मरशङ्करयोरत्र शैलेन्द्रशिखरे निजनिजप्रभावाविर्भाव संवृत्तः श्रूयते ।

**रामः**—अथ किम् ? ।

**सुग्रीवः**—(स्मृत्वा सचमत्कारम्) अहह ! शृङ्गारशान्तरसैकनिधानयोरनयोर्निर्वचनीयः कोऽपि शक्तिगौरवातिरेकः । तथाहि—

स श्रेयसे भवतु भालविलोचनान्त-
पातेन यो रतिपतिं कृतवाननङ्गम् ।
सोऽप्यस्तु येन गिरिजास्यममोघमस्त्रं,
मुक्त्वा कृतः स त्रिपुरर्द्धशरीरशेषः ॥ २९ ॥

**रामः**—(अपवार्य सीतां प्रति)

देवं गिरो जयति वक्षसि दोर्युगेन,
न्यञ्चत्कुचं गिरिजया परिरभ्यमानः ।
यः नन्दनङ्गनिशितपञ्चगनेत्रताप-
नोदाय पट्टकमिवौषधपिण्डगर्भम् ॥ ३० ॥

(सीता सलज्जा किञ्चित् स्मयते ।)

**रामः**—(दृष्टदग्गोत्र सदृशं पुष्पकं प्रति) हे देवयानप्रधान ! किञ्चिद् दक्षिणमसमुपसर्प, यथा प्रयागतीर्थावलोकनेन सफलीकरोमि निजनेत्रयुगम् इति ।

(सर्वे तथा विमानगतिं नाटयन्ति ।)

**लक्ष्मणः**—(दृष्ट्वा सविमर्शम्) कोऽसौ व्यायतैतमीरमस्मान्मुहुर्मुहुरवलोकयल्लयो व्याभिमुखं परिक्रामति [2] ।

**विभीषणः** (वीक्ष्योपलक्ष्य च) अथ तावद् दशमुखमिवास्य मधुराविपर्नेलेरणस्य प्रसादपात्रं कार्पटिकः । (पुनः सवितर्कम्) यथाऽयमेता दिशमुपसर्पति तथा लक्षणेनापि नियतमित क्षापि गमनेन भवितव्यम् ।

1 तु पूर्वं भा० । 2 मुपगम्य भा० ।

( तत प्रविशति यथानिर्दिष्ट कार्पटिक । )

**कार्पटिकः**—( ऊर्ध्वमवलोकयन् ) कथमेते नु प्राप्ता एव विमानस्थिता काकुत्स्थप्रभृतय ? । तद् यावदमी प्रयागावलोकनकुतूहलेन विलम्बन्ते तावदह सत्वरमयोध्या गत्वा समीहित साधयामि । ( इति द्रुततर गच्छति । )

**रामः**—( सुग्रीवविभीषणौ प्रति ) वयस्यौ ! भगवन्तमिह भरद्वाजमुपस्थाय तदनुमता साकेतसीमानमवतरिष्याम ।

( इति निष्क्रान्ता )

**कार्पटिकः**—( निभृत्य ) सोऽहमिदानीं दानवत्वापहृतार्थमृषिकुमारवेष करोमि । ( इति तथाकृत्वा पुरो विलोक्य च ) सेयमयोध्यापुरी । ( पुन सविस्मयम् ) एषा राजन्यसैन्यैरुपरुद्धेव निरीक्ष्यते, तदेत कारणमित समागच्छन्त पुरुषमवगच्छामि । ( इति तमुपसर्पति । )

( प्रविश्य )

**पुरुषः**—( पुरो विलोक्य ) अये ! मुनिकुमारक इव भगवन् ! नमस्ते ।

**कार्पटिकः**—स्वस्ति भवते । भद्र ! किंनिमित्तमिय नगरी गरीयसा सैन्यसन्दोहेन परित परीता सम्प्रति वर्त्तते ? ।

**पुरुषः**—श्रूयताम्—

श्रुत्वा सीताहरणमरणोत्पत्तित पक्षिराजा-
दानिं कर्तुं सपदि भरत कोणपेन्द्रेण सार्द्धम् ।
राज्ञामाज्ञाप्रवणमनसा प्रेषयामास दूता-
नभ्याहृता पुरपरिसरावासिन सन्ति तेऽमी ॥ ३१ ॥

☞ **कार्पटिकः**—( स्वगतम् ) अहो ! सौहार्द दाशरथीनाम् ।

**पुरुषः**—किंनिमित्तमिहागमन उत्सुकतानिवेदितव्याकुलीभावस्य महाभागस्य ? ।←

**कार्पटिकः**—भगवत कुम्भसम्भवस्याऽऽदेशेन भरतसन्दर्शनार्थम् ।

**पुरुषः**—नायमयोध्यायाम्, किन्तु नन्दिग्रामे । तन्मयैव सह तत्र कुमारसन्दर्शनार्थं गम्यतामिति ।

1 °कनविनादन भा० । 2 मुनिकुमारक द० । 3 द्रष्टव्या पत्र १७ टिप्पणी २ । 4 °वञ्चित द० । °वञ्चन भा० । 5 'सन्दर्शना' द० ।

( उभौ परिक्रामत । )

**कार्पटिकः**—( सविमर्शमात्मगतम् ) निश्चितमसो राजकुलव्यापृत, तदिम वार्त यामि । ( प्रकाशम् ) भद्र ! का नाम रामलक्ष्मणयोरिह प्रवृत्ति ? ।

**पुरुषः**—( सखेदम् ) यया द्रोणपर्वताभिगर्चिह्नुमत्रिवेदितया वार्तया सकलमप्यार्त रघुराजकुटुम्बक जीवितसन्देहे वर्तते ।

भरतस्तु—

श्रुत्वा लक्ष्मणवक्षो रक्षोराजेन विक्षत शक्त्या ।
निन्दति निजहृत्पिण्ड शतखण्डमजायमानमसौ ॥ ३२ ॥

**कार्पटिकः**—( सोद्वेगमिव ) अद्यापि तथैव दुर्दैवदण्ड काकुत्स्थकुलस्योपरि भ्राम्यति ? । ततस्तत ? ।

**पुरुषः**—अथ देव्यौ कौशल्यासुमित्रे शोकव्याकुलतायत्तचित्ते साकेतात् समागत वत्यौ धैर्यावष्टम्भरिंश्चिताकारसवरणेन भरतेन प्रतिबोध्य पुनस्तत्रैव प्रेषिते ।

**कार्पटिकः**— केकयराजात्मजाऽपि तत्र समागता ? ।

**पुरुषः**—नहि नहि ।

**कार्पटिकः**—कुत ? ।

**पुरुषः**—न खलु रामभद्रप्रवासवासरादारभ्य भरतो निजमातुर्मुखमवलोकते ।

**कार्पटिकः**—( सचमत्कारम् ) अहो ! लोकापवादभीरुता काऽपि दिलीपान्वयस्य ।

**पुरुषः**—(पुरो विलोक्य) तदिद नन्दिग्रामोद्यानम्, यत्रासौ रत्नसिंहासनाधिरोपित रामभद्रपादुकाग्रत कुशविष्टरोपविष्टो जटावल्कलधारी सुमन्त्रद्वितीय कुमारो मैत्रावरुणप्रहितेन जानूकर्ण्यनाम्ना मुनिशिष्येण सम सम्भाषमाणोऽस्ति । तदिह प्रविशाव । ( इति तथा कुरुत ।)

(तत प्रविशति यथानिर्दिष्टो भरत सुमन्त्रो जानूकर्ण्यश्च ।)

**भरतः**—( सप्रश्रय [ ? मुनि ] शिष्य प्रति ) ब्रह्मर्षे ! किमादिष्टमाराध्यपादै ? ।

**जानूकर्ण्यः**—कुमार ! किमपि ध्यात्वा भगवानित्यादिदेश—यदद्य भवद्भिर्लङ्काभिमुखप्रयाणो मुखैरप्यस्मदागमन यावत् प्रतीक्षणीयम् ।

1 'ताभियानवर्ति' द० । 2 'समाप्त' भा० । 3 'त्वा मत्रमवनेष्याद्दिष्टम्-यद' भा० । 4 'ङ्कागमनप्रया' भ० ।

**भरतः**—शिरस्यारोपितेयं कुलगुरोराज्ञा । परं भवताऽपि तथा यतितव्यम् यथा ते तत्रभवन्तस्त्वरितमागत्य मामनुगृह्णन्ति ।

**मुनिशिष्यः**—ओम् ( इत्युक्त्वा निष्क्रान्तः । )

**कार्पटिकः**—( पुरुषं प्रति ) भद्र ! निष्क्रान्तस्तावदयम् । तत् कालक्षेपाक्षमिहायातमावेदय मां कुमाराय । ( इत्युपसर्पतः । )

**पुरुषः**—( भरतं प्रणम्य ) सोऽयमगस्तिमहर्षिप्रेषितो मुनिपुत्रकः किञ्चिदाख्यातुकाम इतो वर्तते ।

**भरतः**—( अनाकर्णितकेन सवितर्कं चिन्तितम् )

व्यावृत्त्य रामभृत्यः स कपिर्लङ्कां गतो भवेद् भूयः ।
तैरौषधैरशल्यः कच्च्यामाल्लक्ष्मणः किन्नु[1] ॥ ३३ ॥

**पुरुषः**—कथं नावधारितम्[2] । ( पुनस्तदेव कथयति )

**भरतः**—( श्रुत्वाऽवलोक्य च ) कथमसौ करमकः मुनिपुत्रकमेतमुपेनमावेदयति ? ।
( इति सबहुमानमुपवेशयति । )

**भरतः**—तपोनिधे ! किमसुस्थितमना इव[3] विलोक्यसे ? ।

**कार्पटिकः**—( सोद्वेगमिव ) कुमार ! कुतः सौस्थ्यमीदृशे दैव[3]दुर्विपाके ! तथापि गुर्वादेशा[4]यत्तत्तयाऽऽवेदयितुमागतोऽस्मि । श्रूयताम्—

सीताकृते राघवलक्ष्मणाभ्यां, कृत्वा रणं कोणपचक्रवर्ती ।
विमानमारुह्य च पुष्पकाख्यं, पुरीमयोध्यामयमभ्युपैति ॥ ३४ ॥

तदिह भवद्भिरवहितैर्भवितव्यम् ।

( सर्वे श्रुत्वा व्याकुलत्वा नाटयन्ति । )

**भरतः**—( सुमन्त्रं प्रति ) कथमप्रतिविधायैव तौ राजपुत्रावागमिष्यति राक्षसाधिपतिः ? ।

**कार्पटिकः**—( सबाष्पम् ) प्रतिविहितं दुष्टदैवेन ( इत्यधोमुखस्तिष्ठति । )

**सुमन्त्रः**—( साश्रम् ) हन्त ! व्यक्तमावेद्यताम् ।

---

1 'तर्कं चिन्तितम्' दे० ।　2 इत्यग्रतोऽक्षरे ? मा० ।　3 दुर्दैवविपाके मा० ।　4 'शात् तदावे' मा० ।

**कार्पटिकः**—तथैवाऽस्ते ।

**भरतः**—( बलाद् बाष्प निगृह्य सुमन्त्र प्रति ) आर्य ! न ह्यनिष्टमेवविधा स्पष्टमा वेदयन्ति, शेष स्वयमभ्यूहनीयम् ।

**सुमन्त्रः**—( सनिर्वेदमाकाशे ) हा कुमारौ रामलक्ष्मणौ ! हा वत्से वैदेहि ! कीदृगवस्था वर्त्तते सम्प्रति युष्माकम् [1] । विश्राण[2]यन्तु पुनरात्मदर्शन कण्ठगतजीवितस्य जीवलोकस्य ।

**भरतः**—( सावष्टम्भम् ) आर्य ! न खलु विल्पत्सु विधिरनुक्रोशति, तदलमिदानीं विषादेन । ( पुन स्रभक प्रति ) रे त्वमपि मा रोदी, न हि बाष्पनिपातेन शत्रव साध्यन्ते । तदानीयता शरासनम् । गत्वा च निवेद्यतामाहूतायातपार्थिवपरिवृताय शत्रुघ्नाय, यदिहा याति नितरा शी निशाचरपति तद् मयद्भिरुग्रायुधैः सन्नद्धसैन्यै स्थात यम् ।

**पुरुषः**—यदादिशति देव । ( इत्यभिधाय निष्क्रान्त । )

**सुमन्त्रः**—हा कुमारौ रामलक्ष्मणौ ! ( इत्यादि पुन शोचति । )

**कार्पटिकः**—( सुमन्त्र प्रति ) आर्य ! कृत शोका[3]वेगेन । यत —

यस्ता[4]दृक् कृतवान् निकामनघ्ने शोच्य स किं लक्ष्मण
स्तद्भक्तेरुचित विधाय च निजा रामोऽत्यजद् वाच्यताम् ।
वैदेही तदनु प्रविश्य दहने मुख्या सतीनामभूत्,

**भरतः**—( स्व प्रति )

*गर्हामर्हति नापर सति महापापैकपात्रे मयि ॥ ३५ ॥*

( पुन सुमन्त्र प्रति सावष्टम्भम् ) आर्य ! किमत पर निरुद्धो विधिरस्माक करिष्यति [4] । यत —

दैवेन दर्शिता याऽद्य रामलक्ष्मणयोर्गति ।
सहान्त पुरपौराणा सैवास्माक भविष्यति ॥ ३६ ॥

( प्रविश्य )

**पुरुषः**—तदेतद् धनु । ( इति समर्प्य ) कुमार ! मन्त्रीकृतसकलसैनिक कुमार

---

1 °दृशद सु° भा० । 2 °वयन पुन° भा० । 3 °शावेगेन द० । 4 °स्तादृ कृ° द० ।

शत्रुघ्न श्रुताऽपत्यवार्ते देव्यौ कौशल्यासुमित्रे कृतकृशानुप्रवेशनिश्चये प्रतिबोधयितु सरयू:
गरित प्रतिष्ठमानोऽस्मि ।

**भरतः**—( सवैलक्ष्य श्रुत्वा सुमन्त्र प्रति ) आर्य ! सकलमपि तावद् दिलीपकुल मेकेनैव पथा गमयितुमारब्धमधुना दुर्दैवेन । ( पुन सावष्टम्भम् ) भवतु । को विरोध ? । ( इति चापमारोपयति । )

**कार्पटिकः**—( सहर्षमात्मगतम् ) सा'धित म्यात्मसमीहितम् । रामसमागमनसमयश्च प्रत्यासन्न तद् गच्छामीति । ( प्रकाशम् ) कुमार ! नात परमहमालोकितुमुत्सहे । ( इत्युक्त्वा निष्क्रान्त । )

( तत प्रविशन्ति विमान'स्थिता रामभद्रादय । )

**रामः**—( दूरादवलोक्य सहर्षम् ) वत्स लक्ष्मण ! सेय भग'वती महाराजान्वय राजधानी सरयूसलिलपवित्रीकृतपरिसरा पुर प्रेक्ष्यते । तत् प्रणम्यतामियम् ।

( सर्वे प्रणमन्ति )

**लक्ष्मणः**—आर्य ! चिरकालविलोकिताऽप्यसौ नगरी तातमन्तरेण न तथा प्रमोद-मुत्पादयति ।

**रामः**—( स्मृत्वा सगद्गदम् ) वत्स ! नमस्तस्मै निरुपमवात्सल्यवते सुतममिताय महा-राजाय । तथाहि—

भग्न धनुस्त्रिनयनस्य यथाऽहमेवं
आकर्ण्य तत् प्रमदगद्गदया गिरा य ।
अन्त पुर स्वयमुपेत्य मदीयमातु
र्देव्या पुर सरभस कथयाञ्चकार ॥ २७ ॥

**सुग्रीवः**—( समन्तादवलोक्य साश्चर्यम् ) कथमसौ याया परित मन्दिराणि सैन्यानीव निरोधयन्ते ? । तथाहि—

वाहानां निरर्गलैश्च करिणां चूर्णै रथानां तथा,
पत्तीनामपि पङ्क्तिभिस्तनमिद नोर्वीतल दृश्यते ।

---

1 स प्रियैः पुत्रैः' दे० । 2 'भरत्या राम' ह० 3 वयं महाराजं' म० । 4 'नाहिर प म० ।

कल्पान्तोद्धतमेघगर्जितमहाऽपस्मारनिर्म्मारिणि ,
रिञ्चैते रचयन्ति निर्म्मयरव मेरीरवा भेग्या ॥ ३८ ॥

तत् किमेतत् ? इति ।

( सर्वे साश्चर्यमालोकयन्ति । )

**विभीषणः**—( स्मृत्वा सचमत्कार राम प्रति ) यथा स कार्पटिकनामा लक्ष्मणप्रणिधिरयोध्याभिमुख गन्तुमनर्लोकित, तथा तत्राधेन नियतमिमा पुरीमुपरुद्धामह सम्भावयामि ।

**रामः**—( ³सुविमृश्य ) । तदेतदुपपद्यत एव, पर व मशत्रुघ्ने पुरीपालननिघ्ने कुतो रणविस्मयावकाश ? ।

**सौमित्रिः**—भगवन्तौ (पुन सरयूतटमवलोक्य साशङ्कम्) कथमेते मातरौ नहि प्रवेशाभिमुखे इतो निरीक्षयेते ? । तत्र कुशल च मयोर्भरतशत्रु घ्नयोरिति ।

( सर्वेऽपि विशेषव्याकुलता नाटयन्ति । )

**सीता**—( दृष्ट्वा सभयम् ) भैयवदीओ रहुकुलदेवदाओ ! तुम्हाण पसाएण दहरहसुआण दुरिदमन्दरीयदु ।

( राम सीदति । )

**सर्वे**—सम्यगितमवगमिष्याम । ( इति विमानाग्रत परिक्रामन्ति । )

**विभीषणः**—( राम प्रति ) देव ! सोऽयमस्माक चिरपरिचित सपरिवा⁴रो मधुराधिपति, तदेनमुपलक्षयामि । ( इति गदामादायोत्थित सनेत पश्यति । )

**भरतः** —( ऊ र्ध्वमवलोक्य ससम्भ्रमम् ) आर्य सुमन्त्र ! तदिदं विमानम् । अय च राक्षसाधिपतिरिहाऽऽगच्छति । तदिदानीमवलोक्यतामस्मदीयमाचरितम् । ( इति धनुषि शर धत्ते । )

**विभीषणः**—( दृष्ट्वा ) कोऽसौ जटावल्कलधारी तपोधनो धनु पाणि सक्रोध इव मुहुर्मुहुरस्मानवलोकयति ? । भवतु । इत एनमवगच्छामि । ( इति विमानेनोपसर्पति । )

**सुमन्त्रः**—कुमार ! नियत भगवता मैत्रावरुणेन राक्षसपतेरागमनमवगच्छता लङ्कागमनार्थं मन्थरीकृतो भवान् ।

१ भगवत्या रघुकुलदेवता ! युष्माक प्रसादेन दशरथसुतानां दुरितम-तरायताम् ।

1 °यमर भ° मा० । 2 °श्चयमवलो° मा० । 3 ( विमृशति ) दे० । 4 °व रोऽपि मधुराधिपति , तावत् तमुप दे० । 5 एव ग° मा० ।

**भरतः**—किमपरिज्ञातमात्मदशाम् ? ।

**विभीषणः**—(समीपमुपेत्य भरतं प्रति) भोस्तपोधन ! किमर्थोऽयं व्रतचर्याविरुद्धो धनुःपरिग्रहः ? ।

**भरतः**—(सावेशम्) राक्षस ! क्षणमत्रैव तिष्ठ । सुष्ठु यथा तत्र कथयाम्येष निःशेषं धनुर्धारणकारणमिति ।

**विभीषणः**—(दृष्ट्वा साश्चर्यम्) कथमयमकारणे मां प्रतिहीर्षति ? । (इति गदां दर्शयन्)

तपस्विनि कथं पूर्वमस्त्रं मुञ्चामि तु त्वयि ? ।
युद्धे यद्द् दु सहत्वस्य साक्षिणो रामलक्ष्मणो ॥ ३९ ॥

**भरतः**—(पुनः सावेशम्) आः ! किं ब्रूषे ? "युद्धे यद्द् दु सहत्वस्य साक्षिणौ रामलक्ष्मणौ" तदिदानीमनुभवत्वस्य कर्मणः फलम् । (इति बाणं मोक्तुमिच्छति ।)

(प्रविश्य)

**वशिष्ठः**– (भरतं प्रति) वत्स ! कृतं कृतममुना निर्बन्धेन । मुच्यतां चापम् । आदीयतामर्घपात्रम् । दिष्ट्या स एष विमानाधिरूढो रामभद्रः कुशली सीतालक्ष्मणाभ्यां सह सम्प्राप्तः । अयं च राक्षसाधिपतिर्विभीषणः । कपीश्वरः सुग्रीवश्चायम् (इति दर्शयति ।)

**भरतः**—(वशिष्ठं प्रणम्य सानन्दम्) भगवन् ! भवदाननेन्दुविनिर्गतेन रघुकुलकुशलप्रवृत्तिपीयूषप्रवाहेन पुनरुज्जीविता स्मः । (नेपथ्याभिमुखमवलोक्य) कस्कोऽत्र भो !, समानीयतामर्घपात्रम् ।

(प्रविश्य)

**पुरुषः**—देव ! तदेतत् । (इत्यर्घपात्रमुपनीय धनुरादाय निष्क्रान्तः ।)

**सुमन्त्रः**—(सहर्षम्) करभक ! सत्वरमिहाऽऽनय देव्यौ शत्रुघ्नं च ।

**करभकः**—यदादिशति आर्यः । (इत्युक्त्वा द्रुतं निष्क्रान्तः)

**विभीषणः**—(सविस्मयं वीक्ष्य रामं प्रति) देव ! परिभाव्यतामितः । कोऽप्यसौ तापसश्चापकोपौ परित्यज्य सप्रमोदमर्घपात्रं पुरस्कुर्वन्नस्मानभिमुखमभ्येति ।

**लक्ष्मणः**—(उत्थायावलोक्य च सहर्षं रामं प्रति) देव ! देव ! दिष्ट्या वर्धसे ।

---

1 (सामर्षम्) भा० । 2 °दुरात्मवि° दे० । 3 °हति इव द० ।

सोऽयमार्यो भरत सार्घपाणिर्भगवन्त वशिष्ठ[1]मग्रेकृत्य भवन्तमभ्युत्तिष्ठति ।

**रामः**—( श्रुत्वा सानन्दविस्मयम् ) वत्स लक्ष्मण !

इत कृतचिते देव्यानिन सर्वार्पिता चमू ।
इतश्च भरत प्रीत्या समभ्येतीति को विधि ? ॥ ४० ॥

भवतु, सर्वमिदानीं व्यक्तीभविष्यति । ( इति सर्वे विमानावतरण नाटयन्ति । )

**भरतः**—( सरभस राममुपसृत्य ) देव ! सोऽयमगृहीतदुःखसविभागो भरत प्रणमति ।

**रामः**—( सरभस भरतमुत्थाप्याऽऽलिङ्ग्य च वशिष्ठ प्रति ) भगवन् ! अयमचरमो दाशरथि प्रणमति ।

**वशिष्ठः**— वत्स ! कल्याणभाजन भव । ( सीता दू[2]रस्था प्रणमन्ता प्रति ) वत्से ! चिरकालमविधवा[3] वीरप्रसविनी च भूया । ( लक्ष्मणविभीषणसुग्रीवांश्च प्रणमत प्रति ) वत्सा ! विजयध्वमिति ।

( सर्वे यथोचित समुदाचरन्तो हृपाश्रुपातमभिनयन्ति । )

**रामः**—( सुमन्त्र प्रति ) आर्य ! कथय, कथमेष सैन्यविन्यास ? कथ देव्योरय परुपक्रम ? ।

**सुमन्त्रः**—देव ! [4]सम्पातिप्रतिपादितसीतापहारप्रवृत्तिना कुमारभरतेन निवेदित भवदत्याहितमाकर्ण्य देव्योरयमनुचितारम्भ ।

**विभीषणः**—( विमृश्य ) निश्चित तस्यैव कार्पटिकस्य दुर्नाटकमेतत् ।

( प्रविश्य )

**करभकः**—( राम प्रणम्य ) स्वामिन् ! इमे देव्यौ कौशल्यासुमित्रे कुमारशत्रुघ्नेन विनिर्दिश्यमानमार्गे सानन्दौत्सुक्यमित समागच्छत ।

**रामः**—( ससम्भ्रमम् ) कथ देव्यौ स्वयमिहाऽऽगच्छत ? । तदुपसर्पामि । ( इति तथा करोति । )

( तत प्रविशन्ति प्रमोदातिशयमभिनयन्त्यौ कौशल्यासुमित्रे शत्रुघ्नश्च । )

---

1 °ष्ठ पुरस्कृत्य भा० । 2 दूरस्थिता प्र° भा० । 3 °वा पुत्रप्र° भा० । 4 सम्प्रति प्रात° दे० ।

**कौशल्या**—( रामलक्ष्मणौ निरीक्ष्य सुमित्रां प्रति ) सहि सुमित्ते[1] चिरयाल्दो वि एयाण पुत्तयाणं मुहयदमाणदबाप्पप्पवाहपिहिदलोयणाण खु फुडं पिक्खामि ।

**सुमित्रा**—देवि[2] अहं पि त्ति ।

( उभे परिक्रामतः । )

**रामः**—( सरभसमुपेत्य ) अम्ब[1] प्रणमामि । ( इति कौशल्यां प्रणम्य सुमित्रां प्रणमति । )

( लक्ष्मणोऽपि तथाकरोति । )

**देव्यौ**—( पुत्रावालिङ्ग्य शिरस्याघ्राय च ) पुत्तय[3] तुम्हाण सव्वाण वि सुह सजोयरमणिज्ज चिरयाल जीविद भोदु ।

( सीताऽपि समेत्य नामग्रहणार्थं बाष्पमुत्सृजन्ती देव्यौ प्रणमति । )

**देव्यौ**—( सीतामालिङ्ग्य ) वच्छे[4] वीरजणणी होधि ।

**सुग्रीवविभीषणौ**—( दृष्ट्वा ) नियतमेते रामलक्ष्मणजनन्यौ । ( उपेत्य प्रणमतः । )

( देव्यौ सविस्मयमालोकेते । )

**रामः**—( सुग्रीवं दर्शयन् )

[ ,
|
( विभीषणं दर्शयन् ) ]
नक्तञ्चराधिपतिरेष बभूव भूयो,
मन्दोदरीदयितविक्रमबद्धसेतुः ॥ ४१ ॥

**देव्यौ**—( सहर्षम् ) परमेसरस्स सहस्सरस्सिणो पसाएण अम्हेहिं दुवेहिं अहिणव पुत्तजुअलं समासादिदं । ता एदं पि सुहसपत्तिजुत्त चिरयाल नन्ददु ।

---

१ सखि सुमित्रे ! चिरकालादपि एतयोः पुत्रयोः मुखचन्द्रमानन्दबाष्पप्रवाहपिहित लोचनयोः खलु स्फुटं पश्यामि ।

२ देवि ! अहमपि इति ।

३ पुत्रक ! युष्माकं सर्वेषामपि सुखसंयोगरमणीयं चिरकालं जीवितं भवतु ।

४ वत्से ! वीरजननी भव ।

५ परमेश्वरस्य सहस्ररश्मेः प्रसादेन आवाभ्यां द्वाभ्यां अभिनवपुत्रयुगुलं समासादितम् । तदेतदपि सुखसम्प्राप्तियुक्तं चिरकालं नन्दतु ।

( भरतशत्रुघ्नावपि तयोः प्रणामं कुरुतः । )

**वशिष्ठः**—( रामं प्रति ) वत्स ! राज्याभिषेकाय मङ्गलमुहूर्त्तो वर्त्तते । तदेतदलङ्क्रियतां भद्रासनम् ।

**रामः**—आदेशः प्रमाणमिति ।

**वशिष्ठः**—( नेपथ्याभिमुखमवलोक्य ) कः कोऽत्र भो ! ? । समानीयतामभिषेकसम्भारः ।

( प्रविश्य मङ्गलकलशहस्तः )

**जानूकर्णः**—भगवन् ! अयमुपादीयताम् ।

( वशिष्ठः कलशमादाय रामस्याभिषेकं करोति । )

( आकाशे देवदुन्दुभिध्वनिः पुष्पवृष्टिश्च । )

**सुमन्त्रः**—( सानन्दमूर्ध्वमवलोक्य ) कथमसौ वैमानिकलोको रामराज्याभिषेकमहोत्सवानन्दमाविष्करोति ! ।

**रामः**—( भरतं प्रति सोपरोधम् ) वत्स ! चिरकालादनुशयकृशानुसन्तप्ता मध्यमाम्बामात्मीयमुखेन्दुदर्शनेन निर्वापयितुमर्हसि । ( इति वशिष्ठमुखमुदीक्षते । )

( भरतः सलज्जमधोमुखस्तिष्ठति । )

**वशिष्ठः**—वत्स ! नातिक्रमणीयोऽयं राजादेशः ।

( रामः भरतं करे गृहीत्वोत्थातुमिच्छति । )

[[1] . . ... ... ... ]

**वशिष्ठः**—( रामं प्रति ) वत्स ! कथय किं ते भूयः प्रियमनुकरोमि ? ।

**रामः**—( सप्रश्रयमञ्जलिं बद्ध्वा ) भगवन् भास्करान्वयसौवस्तिक !

तीर्णे क्लेशार्णवः सोऽयं नावेव भवदाशिषा ।
स्वजनैः सङ्गतिश्चाभूदस्तु मे किमतः परम् ? ॥ ४२ ॥

**[ वशिष्ठः ]** तथाऽपीदमस्तु—

राजानो जनयन्तु कीर्त्तिकुमुदैरामोदिनीं मेदिनीं,
भूदेवाश्च तदापदामपनुदे वह्नौ वषट् कुर्वताम् ।

1 अत्रान्तरे क्याश्चित् सन्दर्भस्त्रुटित सम्भाव्यते ।

वक्त्राम्भोरुहरङ्गभूमिविहरद्वाग्देवतामत्सरं,
श्रीरुत्सृज्य करोतु तेषु च रतिं मत्तेभविभ्राजिनी ॥ ४३ ॥

( इति निष्क्रान्ताः सर्वे । )

॥ अष्टमोऽङ्कः समाप्तः ॥ छ ॥

॥ समाप्तमिदं उल्लाघराघवं नाम नाटकम् ॥ कृतिः श्रीसोमेश्वरदेवस्य ॥

☞ [1]अम्भोजसम्भवसुता वक्त्राम्भोजेऽस्ति वस्तुपालस्य ।
यद्वीणारणितानि श्रूयन्ते सूक्तिदम्भेन ॥ १ ॥

[ प्रशस्ति ]

आसीद् भूमी ..र्जरो गूर्जराणां, पूजापात्रं श्रीकुमारः पुरोधाः ।
यः प्राकार· पुण्यसंरक्षणार्थं, विप्राकार कल्पितो वेधसाऽत्र ॥ १ ॥

य कर्माणि च षड् गुणाश्च तनुते तद्भूर्भुर न्यस्तयं,
कीर्तिर्यस्य वराम्यनिर्मलरुचिर्नो जातुचिन्मुञ्चति ।
शस्त्राविष्कृतिरध्वरे च युधि च श्लाघ्योऽज्झिहीते यत,
सूत्रं यस्य हृदि स्फुरत्यविरतं ब्राह्मं च राज्यस्य च ॥ २ ॥

अरुन्धतीव कान्ताऽस्य पत्युराज्ञामरुन्धती ।
अभूत्तमि(ऽभी) यया लक्ष्मी साक्षाल्लक्ष्मीरिव क्षितौ ॥ ३ ॥

तदङ्गज स्माऽऽकरहृद्धर्मप्रवृत्तया प्रार्थनया प्रणुन्न ।
चकार सोमेश्वरदेवनामा, स(ऽरा)मायणं नाटकमेतत् ॥ ४ ॥

प्रायो वय वेदविचारपारगस्येन नाथेन तथाभियुक्ता ।
दुर्गेऽत्र मार्गे नऽपि प्रवृत्ता, नोपेक्षणीया कविभिस्तदन्त ॥ ५ ॥ ←

---

1 इतश्चिह्नान्तर्गतोऽयं प्रशस्त्यन्तर्गतो ग्रन्थान्तस्थ दे॰ प्रतौ नास्ति ।

